श्रीनडिमिण्टि सर्वमङ्गलमनीषिकृता

# समासकुसुमावलिः

सम्पादकः

**डा. दिद्दिगि वंशीकृष्णः**

मैसूरु



**शिंशुमारशोधप्रतिष्ठानम्**

मैसूरु



"नमामि शिंशोर्मरणाय कारणं
पुच्छे ध्रुवं वृश्चिकयोगरूपम्।
ज्योतिर्गणैराश्रितदेवमुख्यं
भूयो नमाम्येनमखण्डिततप्रभुम्।।"

शिंशुमारशोधप्रतिष्ठानम्
मैसूरु


ISBN 978-81-946951-1-0
9 788194 695110 >

श्रीनडिमिण्टि सर्वमङ्गलमनीषिकृता

# समासकुसुमावलिः



सम्पादकः

**डा. दिद्दिगि वंशीकृष्णः**

मैसूरु



**शिंशुमारशोधप्रतिष्ठानम्**

**मैसूरु**

**2021**

**SAMASAKUSUMAVALI of Nadiminti Sarvamangala Manishi, Edited by Dr. Diddigi Vamsi Krishna & Published by Shimshumara Shodha Pratishthanam, #97, 2nd Main, 4th Cross, Railway Layout, Bogadi, Mysuru.**

**Mob.: 9513424310**



First Edition: 2021

Copies: 200

Size: 1/8th Crown

Pages: VII+29

Font Credit: Adishila Letterpress (www.adishila.com)

Price: ₹40

ISBN: 978-81-946951-1-0

Printed by:

**Vani Press**

**1098/4, Geeta Road,**

**Chamarajapuram, Mysuru - 570005.**

**Ph: 0821-4253295.**

## गुरुवन्दनम्



सुप्रसन्नो गुरुवृद्धः जीयाच्छड्शास्त्रपारगः ।

मूर्त्यन्तो नृसिंहाख्यः शिष्यपाठार्थभारधृक् ॥

# सम्पादकीयम्

संस्कृतभाषायाः सुलभदर्शनाय समासा आवश्यका एव। तेषां सरलबोधाय बहूनि पुस्तकानि जातानि ग्रन्थाश्च ग्रथिताः सर्वे नष्टाश्चापि। परन्त्वियं समासकुसुमावलिर्नाम लघुकरपुस्तिका ग्रहणधारणपटूनां बालानां समाससुखबोधाय सहकुर्वत्विति महत्या दृष्ट्या प्राचार्यः श्रीमांश्च नडिमिण्टि सर्वमङ्गलमनीषिवर्य इमां समासकुसुमावलिं व्यरचयत्। अस्यां कृतौ प्रतिसमासं तैस्तैः श्लोकोक्तैः शब्दैः विग्रहसहितमुदाहृत्य अस्या एव पुस्तिकायाः साहाय्येन स्वानपि शिष्यान् पाठयित्वा तत्परम्परां सृष्ट्वा च व्याकरणपाठनलालसानां कृते लघुरूपेण महत्पुस्तकं दत्तवानयं महागुरुवर्यः। वयं तु तान् महाशयान् तेषां शिष्यांश्चापि न कदाऽपि दृष्टवन्तः श्रुतवन्तश्च। परन्तु तत्पाठपरम्परायाम् अभ्यस्तवन्तोऽत्यल्पज्ञानिनो वयं पुण्यवन्तः। अस्माकं प्रत्यक्षगुरुवर्यः श्रीमान् नरसिंहमूर्त्याचार्यः अस्य पाठनसमये एवमुक्तवान् यत्- "यदि कोऽपि वाऽध्ययनपटुरिमं ग्रन्थम् अधीतुमुत्सुकः तर्हि अस्य ग्रन्थस्य श्लोकेषु प्रतिश्लोकं तदतिशयां कथां बोधयति" इति। तद्विषये तु वयम् अज्ञानिन एव परं पुण्यवन्तः किन्तु, वयं गुरुपादसेवका इति॥

प्रकृते सर्वत्र प्रकाशिताऽपीयं कृतिः केषुचित्प्रदेशेषु अस्याः नाममात्रज्ञानाभावादस्मात् शिंशुमारसंशोधनप्रतिष्ठानाद्व्याकरणाध्ययनजिज्ञासूनां सुलभ-बोधाय मनीष्यनुक्तैः तदतिरिक्तैः दृष्टान्तैश्च पुनरपि प्रकाशितुं ज्ञातैः विनिश्चिता। एवमेव ग्रन्थस्थानां व्याकरणदोषाणां परिहरणे सहकृतम् आदिशिला इत्यस्याः संस्थायाः संस्थापकं मम मित्रञ्च श्रीकृष्णप्रसादमहं वन्दे॥

अन्त्येऽस्य पुस्तकस्य मुद्रणाय सर्वथाऽपि सहकृताय मैसूरुनगरस्य वाणीमुद्रणालयस्य अधीक्षकाय स्वयमेव श्रीभूषिताय श्रीनिवासाय मनःपूर्वकानि अभिवन्दनानि व्याहरामि॥

**-डा. दिद्दिगि वंशीकृष्णः**

# विषयसूची

***

॥ श्रीः ॥

श्रीनडिमिण्टि सर्वमङ्गलमनीषिकृता

# ॥ समासकुसुमावलिः ॥

भूनायकं वा धननायकं वा
भजन् भुवं वा धनमेति लोके ।
तद्विघ्ननाथं न भजामि किन्तु
सहस्रशस्तं प्रणमामि नित्यम् ॥

श्रीमत्पाणिनिसूत्राणि समालोच्य यथामति ।
बालव्युत्पत्तये कुर्मः समासकुसुमावलिम् ॥

* * *

## I. तत्पुरुषसमासनिरूपणम्

तत्पुरुषोऽष्टविधोऽभूत् प्रथमादिविभक्तिनञ्कृतैर्भेदैः ।
उत्तरपदजनितार्थो मुख्यस्तत्रेति पण्डितैः ख्यातः ॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**१.प्रथमातत्पुरुषः**

**अमृतं योऽपिबद्दैत्यस्तं वैकुण्ठो द्विधाऽच्छिनत् ।**
**राहुरुत्तरकायोऽस्य पूर्वकायोऽभवद्ध्वजः ॥**

उत्तरः कायस्य – उत्तरकायः

पूर्वः कायस्य – पूर्वकायः

अर्धं पिप्पल्याः – अर्धपिप्पली इत्येवमादयः ॥

**२.द्वितीयातत्पुरुषः**

**दुःखातीतो भवत्येव यदि कृष्णाश्रितो जनः ।**
**अथवान्नबुभुक्षुस्सन् मुहूर्तसुखमश्नुते ॥**

दुःखम् अतीतः – दुःखातीतः

कृष्णं श्रितः – कृष्णाश्रितः

अन्नं बुभुक्षुः – अन्नबुभुक्षुः

मुहूर्तं सुखम् – मुहूर्तसुखम्

खट्वाम् आरूढः – खट्वारूढः इत्येवमादयः ॥
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

## ३.तृतीयातत्पुरुषः

**मासावरस्त्वं खलु मासपूर्व-**
**स्त्वहं तु विद्यानिपुणो नितान्तम् ।**
**इतीव संसद्यपि बाडबानां**
**परस्परं वाक्कलहो बभूव ॥**

मासेन अवरः - मासावरः

मासेन पूर्वः - मासपूर्वः

विद्यया निपुणः - विद्यानिपुणः

वाचा कलहः - वाक्कलहः

पित्रा सदृशः - पितृसदृशः

वाचा निपुणः - वाङ्निपुणः

शस्त्रेण हतः - शस्त्रहतः

लोकेन पूजितः - लोकपूजितः

ज्ञानेन हीनः - ज्ञानहीनः

दारुणा शिल्पम् - दारुशिल्पम्
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

दधिना ओदनम् – दध्योदनम्

सुवर्णेन हारः – सुवर्णहारः

आचारेण श्लक्ष्णः – आचारश्लक्ष्णः इत्येवमादयः ॥

## ४.चतुर्थीतत्पुरुषः

**गृही भूतबलिं दत्ते गोसुखं तु कृषीवलः ।**

**दत्ते यष्टा यूपदारु कुण्डलाष्टापदं बुधः ॥**

भूतेभ्यो बलिः – भूतबलिः

गवे[गोभ्यः] सुखम् – गोसुखम्

यूपाय दारु – यूपदारु

कुण्डलाय अष्टापदम् – कुण्डलाष्टापदम्

गवे हितम् – गोहितम् इत्येवमादयः ॥

## ५.पञ्चमीतत्पुरुषः

**पूर्वं चोरभयं प्राप्य व्याघ्रभीतस्ततः परम् ।**

**सुखापेतो जनः सम्यगरण्ये निवसेत् कथम् ॥**
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

चोरात् भयम् – चोरभयम्

व्याघ्रात् भीतः – व्याघ्रभीतः

सुखात् अपेतः – सुखापेतः

वृक्षात् पतितः – वृक्षपतितः

बन्धाद् विमुक्तः – बन्धविमुक्तः

कल्पनाद् अपोढः – कल्पनापोढः

दूराद् आगतः – दूरागतः

पदाद् भ्रष्टः – पदभ्रष्टः

करात् स्रस्तम् – करस्रस्तम्

आकाशाद् गळितम् – आकाशगळितम्

रणात् पलायितः – रणपलायितः

प्रवासात् निवृत्तः – प्रवासनिवृत्तः

भवनात् निष्क्रान्तः – भवननिष्क्रान्तः

राज्यात् निष्कासितः – राज्यनिष्कासितः

तरङ्गेभ्यः अपत्रस्तः – तरङ्गापत्रस्तः इत्येवमादयः ॥
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

## ६.षष्ठीतत्पुरुषः

**अधिकं राजपुरुषस्सेव्यः सर्वमहान् यतः ।**

**वृक्षमूलमुपाश्रित्य जपतो देवपूजकात् ॥**

राज्ञः पुरुषः – राजपुरुषः

सर्वेषां महान् – सर्वमहान्

देवानां पूजकः – देवपूजकः

वृक्षस्य मूलम् – वृक्षमूलम्

वृक्षाणां छाया – वृक्षच्छायम्

अगस्त्यस्य भ्राता – अगस्त्यभ्राता

शिवस्य धनुः – शिवधनुः

विष्णोः महिमा – विष्णुमहिमा

गुरोः उपदेशः – गुरूपदेशः

वसन्तस्य आगमनम् – वसन्तागमनम्

अमृतस्य पानम् – अमृतपानम्

पुत्राणां शतम् – पुत्रशतम्   इत्येवमादयः ॥
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

## ७.सप्तमीतत्पुरुषः

**प्राश्यान्नमीश्वराधीनं स्थालीपक्वं तु मानवः ।**

**वर्त्मन्यातपशुष्कस्सन् दानशौण्डः कथं भवेत् ॥**

ईश्वरे अधीनम् – ईश्वराधीनम्

स्थाल्यां पक्वम् – स्थालीपक्वम्

आतपे शुष्कः – आतपशुष्कः

दाने शौण्डः – दानशौण्डः

साङ्काश्ये सिद्धः – साङ्काश्यसिद्धः

चक्रे बन्धः – चक्रबन्धः

विद्यायां प्रवीणः – विद्याप्रवीणः

धारणायां पटुः – धारणपटुः

शास्त्रे पण्डितः – शास्त्रपण्डितः

शरप्रयोगे कुशलः – शरप्रयोगकुशलः

अध्ययने चपलः – अध्ययनचपलः

वैद्ये निपुणः – वैद्यनिपुणः
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

रामे भक्तिः – रामभक्तिः

आत्मनि प्रत्ययः – आत्मप्रत्ययः

अरण्ये पादपाः – अरण्यपादपाः इत्येवमादयः ॥

## ८.नञ्–तत्पुरुषः

**अज्ञानात् पापमाप्नोति पापाद्ब्राह्मणो भवेत् ।**
**तस्मादिच्छन्ति तत्त्यक्तुमभवायैव पण्डिताः ॥**

न ज्ञानम् – अज्ञानम्

न ब्राह्मणः – अब्राह्मणः

न भवः – अभवः

न अश्वः – अनश्वः

न पवित्रम् – अपवित्रम्

न विद्या – अविद्या

न आत्मा – अनात्मा

न आवश्यकम् – अनावश्यकम्

न मोघम् – अमोघम्
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

न शान्तिः – अशान्तिः

न सामान्यम् – असामान्यम्

न साधारणम् – असाधारणम्

न चञ्चलम् – अचञ्चलम्

न हेतुः – अहेतुः

न मानुषम् – अमानुषम्

न स्थिरम् – अस्थिरम् इत्येवमादयः ॥

\* \* \*

## II.कर्मधारयसमासनिरूपणम्

**कविभिस्सप्तविधः स्यादित्येवं कर्मधारयः कथितः ।**

**तत्पुरुषान्तर्भावात् तद्वत्प्राधान्यमीरितं चास्य ॥**

**विशेषणं पूर्वपदे विशेष्यं**

**तथोभयत्रापि विशेषणं च ।**

**यस्योपमानं परतस्तदादौ**

**सम्भावना चाप्यवधारणा च ॥**
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**१.विशेषणपूर्वपदकर्मधारयः**

**नीलोत्पलानि नारीणां नयनानीव रेजिरे ।**

**कम्पितान्यल्पवातेन सत्सरस्सु स्थितान्यहो ॥**

नीलानि च तानि उत्पलानि – नीलोत्पलानि

अल्पश्चासौ वातश्च – अल्पवातः

सन्ति च तानि सरांसि च – सत्सरांसि

रम्या च सा लता च – रम्यलता

निर्जीवा च सा प्रतिमा च – निर्जीवप्रतिमा

तप्तं च तत् काञ्चनं च – तप्तकाञ्चनम्

महांश्च असौ राजा च – महाराजः इत्येवमादयः ॥

**२.विशेष्यपूर्वपदकर्मधारयः**

**उद्वीक्ष्य यस्य मातङ्गान् घना इति मनीषया ।**

**मयूरव्यंसका इष्टा ननृतुस्तं नृपं भजे ॥**

व्यंसकाश्च ते मयूराश्च – मयूरव्यंसकाः

खसूचिश्चासौ वैयाकरणश्च – वैयाकरणखसूचिः
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

हतकश्चासौ राजा च – राजहतकः इत्येवमादयः ॥

### ३.विशेषणोभयपदकर्मधारयः

**पुंसां स्नातानुलिप्तानामन्नं भोज्योष्णमेव हि ।**

**पथ्यमित्यब्रवीद्वैद्यश्शास्त्रे निश्चप्रचं वचः ॥**

स्नाताश्च ते अनुलिप्ताश्च – स्नातानुलिप्ताः

[पूर्वं स्नातः पश्चादनुलिप्तः – स्नातानुलिप्तः]

भोज्यं च तत् उष्णं च – भोज्योष्णम्

निश्चितं च तत् प्रचितं च – निश्चप्रचम्

अमलं च तत् शीतलं च – अमलशीतलम् इत्येवमादयः ॥

### ४.उपमानोत्तरपदकर्मधारयः

**रामोऽयं पुरुषव्याघ्रः संवृतः कपिकुञ्जरैः ।**

**हनिष्यति बलाद्युद्धे रावणं राक्षसर्षभम् ॥**

पुरुषः व्याघ्रः इव – पुरुषव्याघ्रः

कपयः कुञ्जराः इव – कपिकुञ्जराः
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

राक्षसः ऋषभ इव – राक्षसर्षभः

कविः वराह इव – कविवराहः

मुखं चन्द्र इव – मुखचन्द्रः

करे कमले इव – करकमले इत्येवमादयः ॥

**५.उपमानपूर्वपदकर्मधारयः**

**कौमुदीविशदा भाति या वाणी रतिसुन्दरी ।**
**लतातन्वी सदा दद्यात् सा द्राक्षामधुरां गिरम् ॥**

कौमुदीव विशदा – कौमुदीविशदा

रतिरिव सुन्दरी – रतिसुन्दरी

लतेव तन्वी – लतातन्वी

द्राक्षेव मधुरा – द्राक्षामधुरा

घन इव श्यामः – घनश्यामः

कुसुममिव पेशलम् – कुसुमपेशलम्

सिन्धुः इव गभीरम् – सिन्धुगभीरम्

मेरुनग इव धीरः – मेरुनगधीरः
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

प्रलय इव भीकरम् – प्रलयभीकरम् इत्येवमादयः ॥

**६.सम्भावनापूर्वपदकर्मधारयः**

**तमालवृक्षैरभितस्संवृतो विन्ध्यपर्वतः ।**

**बम्भरैस्सकलैर्दृष्टो दूराद्गजमनीषया ॥**

तमाला इति वृक्षाः – तमालवृक्षाः

विन्ध्य इति पर्वतः – विन्ध्यपर्वतः

गज इति मनीषा – गजमनीषा

मेघ इति छलम् – मेघच्छलम्

गङ्गा इति नदी – गङ्गानदी

कोसल इति देशः – कोसलदेशः

नल इति महाराजः – नलमहाराजः

भागवतमिति पुराणम् – भागवतपुराणम्

बुध इति ग्रहः – बुधग्रहः

विष्णु इति देवः – विष्णुदेवः

नारद इति मुनिः – नारदमुनिः
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

जम्बूः इति द्वीपम् – जम्बूद्वीपम् इत्येवमादयः ॥

### ७.अवधारणापूर्वपदकर्मधारयः

**मनीषासलिलैर्युक्तिरत्नैर्वाक्कल्पनोर्मिभिः ।**

**यशस्सरिद्भिः सम्पन्नो भात्ययं कविसागरः ॥**

मनीषा एव सलिलानि – मनीषासलिलानि

युक्तयः एव रत्नानि – युक्तिरत्नानि

कल्पनाः एव ऊर्मयः – कल्पनोर्मयः

यशांसि एव सरितः – यशस्सरितः

कविरेव सागरः – कविसागरः

विनय एव धनम् – विनयधनम् इत्येवमादयः ॥

\* \* \*

## III.द्विगुसमासनिरूपणम्

**स चैकवद्भाव्यनेकवद्भावीति द्विधा द्विगुः ।**

**कर्मधारय एवास्याप्यन्तर्भावो बुधैर्मतः ॥**
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**१.एकवद्भावी द्विगुः**

**पञ्चवट्या समं क्षेत्रं त्रिलोक्यां न हि विद्यते ।**

**तत्र पञ्चगवं दत्त्वा जनः श्रेष्ठपदं व्रजेत् ॥**

पञ्चानां वटानां समाहारः – पञ्चवटी

त्रयाणां लोकानां समाहारः – त्रिलोकी

पञ्चानां गवां समाहारः – पञ्चगवम्

त्रयाणां भुवनानां समाहारः – त्रिभुवनम् इत्येवमादयः ॥

**२.अनेकवद्भावी द्विगुः**

**युद्धेषु विबुधाः सर्वे बाडबाश्चाध्वरेष्वपि ।**

**गायन्ति यं कार्यसिद्ध्यै भजे षाण्मातुरं मुदा ॥**

षण्णां मातृणाम् अपत्यं पुमान् – षाण्मातुरः

अष्टसु कपालेषु संस्कृतः पुरोडाशः – अष्टाकपालः

इत्येवमादयः ॥

\* \* \*
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

## IV.बहुव्रीहिसमासनिरूपणम्

सप्तभिराख्याभिर्वा विख्यातो यस्स वै बहुव्रीहिः ।

अन्यपदार्थो मुख्यः कथितो विबुधैर्बहुव्रीहौ ॥

द्वाभ्यां पदाभ्यां बहुभिः पदैर्वा

सङ्ख्योभयोस्सा पदयोः पदाग्रे ।

यस्याभवत् पूर्वपदे सहश्च

दिगन्तरालव्यतिहारलक्ष्मा ॥

### १.द्विपदबहुव्रीहिः

प्राप्ताग्निमेवमिषुमूढरथानथाश्वां–

स्तूणीरमुद्धृतशरं च वहन् जवेन ।

रुद्रोऽपि वीरपुरुषास्स पुरो बिभेद

देवैश्च दत्तपशुरेव महाबलस्सन् ॥

प्राप्तः अग्निः यं सः – प्राप्ताग्निः

ऊढः रथः यैः ते – ऊढरथाः

दत्तः पशुः यस्मै सः – दत्तपशुः
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

उद्धृताः शराः यस्मात् सः – उद्धृतशरः

महत् बलं यस्य सः – महाबलः

वीराः पुरुषाः यासु ताः – वीरपुरुषाः इत्येवमादयः ॥

## २.बहुपदबहुव्रीहिः

**नीलोज्ज्वलवपुः पातु श्रीमत्पीताम्बरो हरिः ।**
**यस्य प्रसादात् कुब्जाऽभद्दिव्यसुन्दरविग्रहा ॥**

नीलम् उज्ज्वलं च वपुः यस्य सः – नीलोज्ज्वलवपुः

श्रीमत् पीतम् अम्बरं यस्य सः – श्रीमत्पीताम्बरः

दिव्यः सुन्दरश्च विग्रहः यस्याः सा – दिव्यसुन्दरविग्रहा

इत्येवमादयः ॥

## ३.सङ्ख्योभयपदबहुव्रीहिः

**काननेऽस्मिन्नहो राजन् द्वित्रैरायासिता जनैः ।**
**लभ्यन्ते पञ्चषा नागा इत्यूचुर्बलिनः प्रभुम् ॥**
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

द्वौ वा त्रयो वा – द्वित्राः

पञ्च वा षड्वा – पञ्चषाः

त्रयो वा चत्वारो वा – त्रिचतुताः इत्येवमादयः ॥

**४.सङ्ख्योत्तरपदबहुव्रीहिः**

**ब्रह्माणः कति वा रुद्रा वदन्तमिति सङ्ख्यया ।**
**कुशलस्त्वेकया युक्त्या वदेदुपदशा इति ॥**

दशानां समीपे ये सन्ति ते – उपदशाः इत्येवमादयः ॥

**५.सहपूर्वपदबहुव्रीहिः**

**सकलास्सहसन्तानाः सकला अपि बाडबाः ।**
**प्रोचुः स्वस्ति महीपाय सहपुत्राय सन्ततम् ॥**

कलाभिस्सह वर्तन्त इति – सकलाः

सन्तानैः सह वर्तन्त इति – सहसन्तानाः

पुत्रेण सह वर्तत इति – सहपुत्रः इत्येवमादयः ॥
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**६.दिगन्तराललक्षणबहुव्रीहिः**

**विद्युदुत्तरपूर्वायाममोघो मारुतोऽथवा ।**

**यदि दक्षिणपूर्वायां वृष्टिर्नैव भवेत्तदा ॥**

उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा – उत्तरपूर्वा

दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा – दक्षिणपूर्वा

इत्येवमादयः ॥

**७.व्यतिहारलक्षणबहुव्रीहिः**

**बाहूबाहवि केषाञ्चिन्मुष्टीमुष्ट्यद्भुतं तथा ।**

**केशाकेश्यभवद्युद्धं वानराणां च रक्षसाम् ॥**

बाहुभिर्बाहुभिश्च गृहीत्वेदं युद्धं प्रवृतं – बाहूबाहवि

मुष्टिभिर्मुष्टिभिश्च प्रहत्येदं युद्धं प्रवृत्तं – मुष्टीमुष्टि

केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं – केशाकेशि इत्येवमादयः ॥

\* \* \*
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

## V.अव्ययीभावसमासनिरूपणम्

यस्याभवत् पूर्वपदेऽव्ययस्य
नाम्नो विधानाद्विविधं च लक्ष्म ।
पूर्वः पदार्थोऽपि च यत्र मुख्य-
स्तमव्ययीभावमुदाहरामः ॥

### १.अव्ययपूर्वपदाव्ययीभावः

भो राजन् प्रत्यहं भूयाद्यथाशक्त्यधिबाडबम् ।
भक्तिस्तयास्तु सम्भद्रं निष्पापमुपलोचनम् ॥

अहन्यहनि – प्रत्यहम्

शक्तिमनतिक्रम्य – यथाशक्ति

बाडबेषु अधि – अधिबाडबम्

भद्राणां समृद्धिः – सम्भद्रम्

पापानाम् अभावः – निष्पापम्

लोचनयोः समीपे – उपलोचनम् इत्येवमादयः ॥
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

### २.नामपूर्वपदाव्ययीभावः

स्वस्यापि भोजने यस्य सूपप्रति न युज्यते ।
शाकप्रत्यथवाऽन्येभ्यः कथं दास्यति स प्रभुः ॥

सूपस्य लेशः – सूपप्रति

शाकस्य लेशः – शाकप्रति इत्येवमादयः ॥

\* \* \*

## VI.द्वन्द्वसमासनिरूपणम्

अस्मिन् समासे प्राधान्यमुभयोः स्यात् पदार्थयोः ।
स हि द्वन्द्वश्चतुर्धा स्याद्बुधैरिति विनिश्चितः ॥

इतरेतरयोगाख्यः समाहाराह्वयस्तथा ।
द्वाभ्यां पदाभ्यां बहुभिरुभौ चेति चतुर्विधः ॥

### १.द्विपदेतरेतरयोगद्वन्द्वः

ययोर्बलेन समितौ निहतौ कंसरावणौ ।
सूर्याचन्द्रमसोर्वंश्यौ रामकृष्णावहं भजे ॥
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

कंसश्च रावणश्च – कंसरावणौ

सूर्यश्च चन्द्रमाश्च – सूर्याचन्द्रमसौ

रामश्च कृष्णश्च – रामकृष्णौ इत्येवमादयः ॥

**२.बहुपदेतरेतरयोगद्वन्द्वः**

**वापीकूपतटाकानां महतां स्थापनादपि ।**

**धर्मार्थकाममोक्षाश्च सिध्यन्ते नात्र संशयः ॥**

वापी च कूपश्च तटाकश्च – वापीकूटतटाकाः

धर्मश्च अर्थश्च कामश्च मोक्षश्च – धर्मार्थकाममोक्षाः

घटश्च पटश्च कुड्यं च – घटपटकुड्यानि इत्येवमादयः ॥

**३.द्विपदसमाहारद्वन्द्वः**

**शीतोष्णं सुखदुःखं च सहन् यो वर्तते सदा ।**

**नियम्य वात्त्वचं सम्यक् स हि योगीति कथ्यते ॥**

शीतं च उष्णं च तयोः समाहारः – शीतोष्णम्

सुखं च दुःखं च तयोः समाहारः – सुखदुःखम्
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

वाक् च त्वक् च तयोः समाहारः – वाक्त्वचम् इत्येवमादयः ॥

### ४.बहुपदसमाहारद्वन्द्वः

**ढक्कामृदङ्गपटहं यस्य दध्वान मन्दिरे ।**

**अश्वहस्तिरथं यस्य भावुकं तस्य भूभृतः ॥**

ढक्का च मृदङ्गश्च पटहश्च तेषां समाहारः – ढक्कामृदङ्गपटहम्

अश्वश्च हस्ती च रथश्च तेषां समाहारः – अश्वहस्तिरथम्

पाणिश्च पादश्च ग्रीवा च तेषां समाहारः – पाणिपादग्रीवम्

इत्येवमादयः ॥

\* \* \*

## VII.अलुक्समासः

**कण्ठेकालं स्मरन्नेव जनुषान्धो हृदि स्पृशन् ।**

**वाचोयुक्तिं वदन् जीवत्यन्तिकादागतं प्रति ॥**

कण्ठे कालः यस्य सः – कण्ठेकालः

जनुषा अन्धः – जनुषान्धः
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

हृदि स्पृशतीति – हृदिस्पृक्

वाचः युक्तिः – वाचोयुक्तिः

अन्तिकात् आगतः – अन्तिकादागतः

पश्यतो हरतीति – पश्यतोहरः

वने चरतीति – वनेचरः इत्येवमादयः ॥

\* \* \*

## VIII.गतिसमासः

**साक्षात्कृत्य हरिं सम्यगलङ्कृत्य पुरं प्रभो ।**

**तिरस्कृत्य रिपून पाहि पुरस्कृत्य द्विजान् भुवम् ॥**

साक्षात् कृत्वा – साक्षात्कृत्य

अलं कृत्वा – अलंकृत्य

तिरः कृत्वा – तिरस्कृत्य

पुरः कृत्वा – पुरस्कृत्य

ऊरी कृत्वा – ऊरीकृत्य इत्येवमादयः ॥

\* \* \*
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

## IX.नित्यसमासः

**कुम्भकारस्तन्तुवायो लोहकारक एव च ।**

**श्रेणयोऽन्येऽपि संस्थाप्याः पार्श्वे ग्रामस्य यत्नतः ॥**

कुम्भं करोतीति – कुम्भकारः

तन्तुं वयतीति – तन्तुवायः

लोहं करोतीति – लोहकारः

तापिच्छेन निभाः – तापिच्छनिभाः इत्येवमादयः ॥

**शालातुरीयेण महात्मना हि**

**सर्वे समर्था विहितास्समासाः ।**

**तेषूपयुक्ता विहितास्तथाऽस–**

**मर्थं तथा ज्ञापकसिद्धमुश्मः ॥**

\* \* \*

## X.असमर्थसमासः

**तनुमुद्धूलयन् मर्त्यः शिवभागवतो यदि ।**

**अरिषड्वर्गतस्तस्य भयं नास्ति कदाचन ॥**
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

भगवति भक्तः – भागवतः

शिवे भागवतः – शिवभागवतः

षण्णां वर्गः – षड्वर्गः

अरीणां षड्वर्गः – अरिषड्वर्गः

सूर्यं न पश्यन्तीति – असूर्यपश्याः इत्येवमादयः ॥

**प्रायिकमेषां कथितं प्राधान्यं चातिमालादौ ।**

**दन्तोष्ठे द्वित्रादौ नैतत्सूपप्रतीत्यादौ ॥**

मालाम् अतिक्रान्तः – अतिमालः

दन्तश्च ओष्ठश्च तयोः समाहारः – दन्तोष्ठम्

द्वौ वा त्रयो वा – द्वित्राः

सूपस्य लेशः – सूपप्रति इत्येवमादयः ॥

\* \* \*

## XI.कृदादिवृत्तयः

**कृत्तद्धितसनाद्यन्तधातुभ्यश्चैकशेषतः ।**

**समासादपि विद्वद्भिः कथिताः पञ्च वृत्तयः ॥**
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

## १.कृद्वृत्तिः

**भक्तानामपि मर्त्यानाममराणामथापि वा ।**

**सम्पादयति या ज्ञानं तां वाचं प्रणमाम्यहम् ॥**

भजन्त इति – भक्ताः

म्रियन्त इति – मर्त्याः

न म्रियन्त इति – अमराः

ज्ञायतेऽनेन इति – ज्ञानम्

उच्यते इति – वाक् इत्येवमादयः ॥

## २.तद्धितवृत्तिः

**मानुषानादितेयान् वा पीडयन्तो भुवि स्थिताः ।**

**ये दैतेयास्तान्निहन्तुं जातो दाशरथिः स्वयम् ॥**

मनोरपत्यानि पुमांसः – मानुषाः

अदितेरपत्यानि पुमांसः – आदितेयाः

दितेरपत्यानि पुमांसः – दैतेयाः

दशरथस्यापत्यं पुमान् – दाशरथिः
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

पुलस्त्यस्य गोत्रापत्यं पुमान् – पौलस्त्यः इत्येवमादयः ॥

**३.सनाद्यन्तधातुवृत्तिः**

**यः पास्पर्धीति वा लोकान् देवैर्वैरायते सदा ।**

**राक्षसस्य विनाशाय तस्य पुत्रीयतु प्रभुः ॥**

अतिशयेन स्पर्धते – पास्पर्धीति

वैरमाचरति – वैरायते

पुत्रमात्मन इच्छति – पुत्रीयति इत्येवमादयः ॥

**४.एकशेषवृत्तिः**

**सर्वेषामपि लोकानां पितरौ यौ सनातनौ ।**

**विदितौ पालनाच्चित्ते तौ शिवौ सततं भजे ॥**

माता च पिता च – पितरौ

सनातनी च सनातनश्च – सनातनौ

विदिता च विदितश्च – विदितौ

सा च स च – तौ

शिवा च शिवश्च – शिवौ इत्येवमादयः ॥
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

## ५.समासवृत्तिः

समासवृत्तिस्सर्वेषु समासेषु निरूपिता ।
पदार्थस्याभिधानं हि वृत्तिरित्यभिधीयते ॥

भो भो मात्सर्यमुत्सार्य वात्सल्यान्मत्कृतामिमाम् ।
पश्यन्तु विबुधाः सर्वे समासकुसुमावलिम् ॥

श्रीमध्यमन्दिरकुलाम्बुधिपूर्णचन्द्र-
श्रीसर्वमङ्गलमनीषिकृता सलीलम् ।
एषा "समासकुसुमावलि"राब्जतारं
जीयात् कृपानिधिसदाशिवसम्प्रसादात् ॥

॥ समासकुसुमावलिः समाप्ता ॥
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~